


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रिमासपत्रिका
फिब्रवरि २०२१
रू.५/-

तिरुमलक्षेत्रे
रथसप्तमी
१९-०२-२०२१





01-01-2021 दिनाङ्के नवीनसंवत्सरसन्दर्भं पुरस्कृत्य ति.ति.दे. पक्षतः
आन्ध्रप्रदेशस्य गवर्नर् मान्यश्री विश्वभूषण् हरिचन्दन् महोदयेभ्यः
तथा आन्ध्रप्रदेशस्य मुख्यमन्त्री मान्यश्री वै.यस्.जगन्मोहन् रेड्डि महोदयेभ्यः च
ति.ति.दे. पालकमण्डल्यध्यक्षैः श्री वै.वि.सुब्बारेड्डि महाभागैः
नूतनसंवत्सरशुभाशंसनपुरस्सरं स्वामिनः प्रसादप्रदानदृश्ये।









05-01-2021 दिनाङ्के गुण्टूरु जिल्ला, नरसरावुपेटक्षेत्रे ति.ति.दे. पक्षतः
आचरितः कामधेनुपूजामहोत्सवः।
कार्यक्रमेऽस्मिन् आन्ध्रप्रदेशस्य मुख्यमन्त्रिवर्याः मान्यश्री वै.यस्.जगन्मोहन् रेड्डि महोदयाः,
ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः, ति.ति.दे. कार्यनिर्वहणाधिकारिणः
डा॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस्. महाभागाः इतराधिकारिणश्च भागमगृह्णन्।



## गीतामृतम्

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्।।

(भगवद्गीता १९/१)

आकाशं पृथिवीं च प्रतिध्वनिभिरापूरयन् यः प्रसिद्धः श्रीकृष्णार्जुनादीनां शङ्खनादः सः धृतराष्ट्रसम्बन्धिनां दुर्योधनादीनां मनांसि हृदयानि छिन्नानि चकार।



## सङ्कीर्तनम्



अविनयमपनय विष्णो दमय
मनः शमय विषयमृगतृष्णाम्।
भूतदयां विस्तारय तारय संसारसागरतः

(शङ्कराचार्यकृतविष्णुषट्पदीस्तोत्रम् - १ श्लोकः)

हे विष्णो! दयासिन्धो! भक्तवत्सल! तव भक्तानां अविनयं निर्गमय, मनः शान्तिं प्रयच्छ, विषयपदार्थविषये अविच्छिन्नपिपासां निवारय, स्वभिन्नजीवादिदयां विस्तारय, अहङ्कारं नाशय, तदनु संसारात् नश्वरात् सर्वान् मोक्षं नय।।

# मुक्तिर्नो दशकोटिजन्मसु कृतैः पुण्यैर्विना लभ्यते

मनुजैः पुण्यप्राप्त्यै बहूनि कर्माण्याचर्यन्ते। तेष्वपि कर्मसु कालानुगुणं दीपावल्यादिपर्वदिनेषु क्रियमाणानि उत्सवादीनि जानीमः। तत्र रथसप्तमीदिनानन्तरं या अष्टमी सा भीष्माष्टमी इति प्रसिद्धा। यतः भीष्मः शरशय्यायां षट्चत्वारिंशद्दिनानि यावत् जीवन् उत्तरायणारम्भे अस्यामेव तिथौ प्राणं तत्याज। अतः भीष्माष्टमीं पुरस्कृत्य समेपि किञ्चिद्व्रतमाचरन्ति।

को वा भीष्मस्य विशेषः? गङ्गाशन्तन्वोः पुत्रः भीष्मः महातपस्वी कौरवपक्षे स्थित्वापि पाण्डवपक्षपातिनः श्रीकृष्णस्य भगवतः भक्त एवासीदिति ज्ञायते कुरुक्षेत्रसङ्गमे अर्जुनं रक्षितुं श्रीकृष्णः चक्रायुधेन भीष्मं हन्तुं आगच्छति सत्यपि प्रतिरोधं न कृतवान्, किन्तु भगवता मरणभाग्यं प्राप्नुयाम् इत्येव अचिन्तयदित्यनेन।

किञ्च राजसूययागे अग्रताम्बूलस्वीकारसन्दर्भे अन्ये अहमहमिकया आगच्छन्तः चेदपि श्रीकृष्ण एव तत्रार्ह इति निस्सन्देहं प्रकटय्य भगवद्विषयकभक्ताग्रेसरः सञ्जातः।

यदा शरशय्यामासीत्तदापि श्रीकृष्णप्रेरणया धर्मस्वरूपं युधिष्ठिरं प्रत्येव वर्णाश्रमधर्मान्, राजधर्मान्, आपद्धर्मान् मोक्षधर्मान्, श्राद्धधर्मान्, स्त्रीधर्मान्, दानधर्माद्यनेकधार्मिकविषयान् अवबोधयदित्यनेन ज्ञायते अयं धर्मशूर इति।

शास्त्रेषु पितृविहीनाः पितृप्रीत्यै स्वस्वपितॄनुद्दिश्य तिलतर्पणादिकं कुर्युः इति विहितम्। परन्तु अयं विशेषः यत् एषः पितुः इच्छानिमित्तं विवाहादिकं त्यक्त्वा आजन्मब्रह्मचारी अपुत्रश्चेदपि सर्वैः मानवसमूहैः स्वसाक्षात्पितृसमानतया तर्पणादिकं प्राप्नोतीत्यतः एव स सर्वेषां पितामहकल्पः पितामहो वेति अवगच्छामः। अतः सर्वेपि...

''वैय्याघ्रपदगोत्राय साङ्कृत्यप्रवराय च।
गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे।।
अपुत्राय जलं दद्मि नमो भीष्माय वर्मणे।
भीष्मश्शान्तनवो वीरः सत्यवादी जितेन्द्रियः।।''
वसूनामवताराय शन्तनोरात्मजाय च।
अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे।।

इत्युक्त्वा अपसव्येन तर्पणम्, आचम्य, सव्येन अर्घ्यश्च जीवत्पितृकाः अपि दद्युः इति सम्प्रदायविदामुपदेशः श्रूयते।

प्रायः एतादृशैः प्रतिज्ञापालनं, पितृभक्तिः, सच्छीलतासम्पत्तिः, धर्ममार्गैकबुद्धिः इत्यादिभिर्गुणैरेव स सर्वेषाम् आदर्शस्वरुपः, मार्गदर्शकश्च अभवत्।

ये चास्मिन् दिने तर्पणादिकं कुर्वन्ति ते संवत्सरकृतेन पापेन विमुक्ता भवन्ति। अतः वयं समेपि एतादृशपुण्यकार्याणि आचर्य, धर्ममार्गं प्राप्य भीष्मोक्तविष्णुसहस्रनामपारायणादीनि कृत्वा पुण्यलेशभाजो भवेम, परमात्मकृपाछत्रिणो भवेम।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-११


## फिब्रवरि २०२१

श्रीशार्वरिनामसंवत्सरस्य पुष्यकृष्णचतुर्थीतः
माघकृष्णप्रथमा पर्यन्तम्- १९४१



मुखचित्रम् - सूर्यप्रभवाहने श्रीमलयप्पस्वामिनः उत्सवमूर्तिः, तिरुमल

अन्तिमरक्षापुटः - श्रीभूसमेतलक्ष्मीवेङ्कटेश्वरस्वामिनः उत्सवमूर्तिः, देवुनि कडपा


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# श्री कूरत्ताळ्वान् वैभवम्

- क.रा.मुकुन्दः
चरवाणी - ९६७७९२५६५७



अस्मिन् भूमण्डले द्वादशमहायोगिषु (आळवार्) अन्यतमः प्रधानः महायोगी च भवति अयं जनः कूरत्ताळवान् इति। साक्षात् रामस्य स्वरूपी इति केचन कथयन्ति। पुरुषलक्षणेषु प्रधानतया जीवकारुण्यम्, आचार्यभक्तिः, वैराग्यं, भक्तिः, पाण्डित्यं, सत्कर्मानुष्ठानम् इत्यादिना आवृतः असौ।

अयञ्च महाभागः तिरुक्काञ्चिमानगरे, कूरमानगरे, कलियुगे सौम्यवर्षे, मकरमासे, कृष्णपक्षे, पञ्चम्यां शुभतिथौ, हस्तानक्षत्रे, बृहस्पतिवासरे, श्रीअनन्तभट्टाचार्यपेरुन्देवीदम्पत्योः जनितः।

अस्य पितुः अपि कूरत्ताळवान् इति नामास्ति। स्वपिता 'श्रीवत्साङ्कः' इति नामकरणं कृतवान्। अस्य कूरत्ताळवान्, कूरेशः, कूरनाथः, श्रीकूरभट्टः, कूराधिपः, श्रीवत्सचिह्नः, श्रीवत्साङ्कः इत्यादि नामानि सन्ति। एषः महावैय्याकरणः इत्यपि प्रसिद्धः। अत एव एते ''नडमाडुं पतञ्जलिरवर्'' इति बिरुदाङ्किताः। स्वपितृसविधे एव संस्कृतः सन् समग्राध्ययनं चक्रुः।

किञ्च भगवद्रामानुजाचार्याणां दिव्यसन्निधौ श्रीभाष्यरचनासन्दर्भे आचार्यैः सह काश्मीरशारदापीठस्थ भगवद्बोधायनवृत्तिं एकरात्रौ कण्ठस्थीकृताः महदेकसन्थाग्राहिणः। एतेषां सहयोगेनैव रामानुजाचार्याः अनितरसाध्यं श्रीभाष्यं विरच्य विशिष्टाद्वैतसिद्धान्तं दशदिक्षु च सुस्थिरीकृतवन्तः। ''बाल्यात्प्रभृति सुस्निग्धः'' इति वाल्मीकिवचनवत् सर्वशास्त्रपारङ्गतोऽपि जन्मना एव सम्पद्भरितोप्ययं महाजनः विद्या-अभिजन-धनामत्तः षड्गुणैश्वर्यसम्पन्नः सम्पदं तृणप्रायं मत्वा समस्तं दानं कृतवानित्यतः परमविरागीति वदन्ति। यथा - **''तृणीकृतविरिञ्चादिनिरङ्कुशविभूतयः।
रामानुजपदाम्बोजसमाश्रयणशालिनः।।** इति।

भगवल्लीलासक्ताः भक्तिनिष्ठागरिष्ठाः एते श्रीरङ्गनाथस्वामिनः लीलाविशेषेण लब्धं 'अक्करवडिसे'' नामकं शर्कराान्नप्रसादं भुक्त्वा स्वाम्यनुग्रहेण द्वौ बालकौ प्रापुः। तयोः ज्येष्ठानां आज्ञानुसारं व्यासभट्टः, पराशरभट्टः इत्यपि नाम ददुः।

किञ्च ''मेळियै कडक्कुं एम्बपेरुमानार्'' इति रामानुजनूर्न्ददै इत्यादिषु उक्तप्रकारेण बहवः मुनयः कूरत्ताळवार् महाभागस्य श्रेयः सेवितवन्तः। एते स्वामि तिरुक्कोष्ठियूर् तम्बिनः कृते उपदेशं स्वीकृतवन्तः। तत्रापि अहङ्कारादिविहीना एवासन्।

आत्मगुणपरिपूर्तिः अस्ति यत् सप्तप्रकारमध्ये वर्तमानं श्रीरङ्गनाथमपि निजबुध्या परिरक्षितवन्तः। वैष्णवसम्प्रदायस्थापनाय स्वनेत्रं अपि दत्तवन्तः। ''अच्युतन् अनन्तकीर्तिः आदि अन्तमिल्लदवन्'' इति सः कथयति यत् साक्षात् श्रीमन्नारायणस्य स्वरूपी कूरत्ताळवार्, स एव नारायण इति।

**अस्य च महाकृतयः भवन्ति।**

- श्री अतिमानुषस्तवम्।
- सुन्दरबाहुस्तवम्।
- पञ्चकम्।
- प्रार्थनापञ्चकमित्यादयः।

एवं संस्कृतेऽपि नव ग्रन्थान् रचयामासुः।

स्वामिनः मदुरैमानगरे 'तिरुमलिशैपिराण्' देवालये विद्यमानस्वदोषं निवर्तयामासुः। तत्रैव सुन्दरबाहुस्तवं अलिखन् इत्यपि गाथा वर्तते।

एतैः प्रदर्शितः सन्मार्गाः यथा -

**जीवने अन्यजीवदयादिकं पालयामः।**
**मनसा, वाचा, कर्मणा हिंसां त्यजामः।**
**शक्तौ सत्यां सत्कार्यं कुर्मः।**
**नारायणैकमतयः भूत्वा लौकिकविषयेभ्यः दूरे जीवामः इत्यादयः।**

एतादृशमार्गे एव जीवनमर्पयित्वा स्वस्य १०८ तमे वर्षे परमपदमगच्छन्। तादृशमहाविरक्तं स्मरन्तः तस्य मार्गे जीवनं यापयामः महास्वामिनः अनुग्रहेण।

सर्वे जनाः सुखिनो भवन्तु।



# रथसप्तमी

- विद्वान् वि.सुधीराचार्यः
चरवाणी - ७८४२१२०६४१



आबाल्यात् वयं श्रुण्वन्त एव स्मः यत् बलिपाडयमी, भगिनी द्वितीया, अक्षयतृतीया, विनायकचतुर्थी, ऋषिपञ्चमी, सुब्रह्मण्यषष्ठी, दुर्गाष्टमी, महानवमी, विजयदशमी, वैकुण्ठैकादशी, मुक्कोटिद्वादशी, शनित्रयोदशी, अनन्तचतुर्दशी, दीपावली अमावास्या, कार्तिकपौर्णमी इत्यादिरूपेण एकैकस्या तिथेः अपि माहात्म्यम् किमिति।

तत्र रथसप्तमी अपि अन्यतमा विशिष्टा तिथिः। यतः इमामेव तिथिं पञ्चाङ्गर्तारः 'सूर्यजयन्ती' इति ब्रुवन्ति। राजपुटान् इत्यादिप्रदेशेषु ''सौरसप्तमी'' इति वदन्ति। वङ्गदेशे 'भास्करसप्तमी' इति, अन्यप्रान्तेषु 'जयन्तीसप्तमी, महासप्तमी' इत्यपि भणन्ति। एतादृशनामभिः ज्ञायते यत् सूर्याराधनाय विशिष्टं दिनमिदमिति। परमात्मा माघशुद्धसप्तमीतिथौ सूर्यं ससर्ज। अत एव इदं दिनं 'सूर्यजयन्ती' नाम्ना प्रसिद्धम्। 'सौरसप्तमी, भास्करसप्तमी इत्यादिनामानि सूर्यजयन्तेः पर्यायपदानि।

एकस्मिन् वत्सरे चतुर्विंशतिसङ्ख्याकसप्तमीतिथिषु रथसप्तम्याः खगोलरीत्या च महत्त्वमस्ति। अस्मिन् तिथौ सूर्योदयकाले आकाशमण्डले नक्षत्राणां सन्निवेशः रथाकारे गोचरायते इत्यतो वा रथसप्तमीति वदन्ति। साधारणतया सूर्योदयचन्द्रोदयवेलासु आकाशे दृश्यमाणं नक्षत्रसन्निवेशमाधारीकृत्यैव व्रतानि, पूजाः, पर्वाणीत्यादयः निर्णीयन्ते। सप्तमीव्रतेषु रथसप्तमीं विहाय कन्याणसप्तमी, कमलासप्तमी, शर्करासप्तमी, अचलासप्तमी, रथाङ्गसप्तमी, महासप्तमी, जयासप्तमी, विजयासप्तमी, जयन्तीसप्तमी, अपराजितासप्तमी, महाजयासप्तमी, नन्दासप्तमी सिद्धार्थकादिसप्तमी, साक्षुभार्यासप्तमी, सर्पसप्तमी, मार्ताण्डसप्तमी, सूर्यव्रतसप्तमी, सप्तसप्तिसप्तमी, अर्कसम्पुटसप्तमी, निम्बसप्तमी, मरीचसप्तमी, फलसप्तमी इत्यादीनि अनेकानि सप्तमीव्रतानि स्मृत्यादिग्रन्थेषु द्रष्टुं पारयामः। प्रायः इमानि सर्वाण्यपि सूर्यसम्बद्धान्येव।

**आरोग्यदाता सूर्यः** - ज्योतिषशास्त्रे ''आत्मप्रभावशक्तिश्च पितृचिन्ता रवेः फलः'' इति नवग्रहेषु प्रधानभूतस्य सूर्यस्योपसनेन सूर्यानुग्रहेण आत्मशक्तिः, नेत्रशक्तिः, हृद्रोगाभावादिकं वर्धते। किञ्च मेषराशौ सूर्यस्य वर्तमाने जनितः जनः आत्मप्रभावाधिको भवति इत्यपि वदन्ति। ''आरोग्यं भास्करादिच्छेत्'' इत्युक्तदिशा सूर्यकान्तिषु विद्यमानकिरणप्रभावेणैव अस्माकं शरीरे सहजसिद्धतया विटमिन् 'डि' उत्पद्यते। तस्याभावे सति अस्मासु अस्थि शैथिल्यादिकं सम्भवतीति वैद्याः उररीकुर्वन्ति। सूर्यकिरणजन्यसंयोगेनैव सृष्टिः, आहारोत्पत्तिः पोषणमित्यादयः सक्रमं प्रभवन्ति। मानवशरीरं तु प्रभातसूर्याकिरणादितप्तं भवेदित्यत एव वैदिकवाङ्मये सन्ध्यावन्दनम्, सूर्यनमस्काराः, अर्घ्यप्रदानमित्यादीनि कर्माणि मनिषिणः उपदिदिशुः इति वैज्ञानिकाः वदन्ति। अनेन ज्ञायते ऋषिमुनयः श्रेष्ठवैज्ञानिकाः इति।

ब्रह्माण्डे तावत् अस्माकं दृश्यमाणः सूर्यः एकश्चेदपि द्वादशादित्याः सन्ति १. मित्रः२.रविः ३.सूर्यः ४. भानुः ५. खगः ६. पूषा ७. हिरण्यगर्भः ८.मरीचिः ९. सविता १०. आदित्यः ११.अर्कः १२.भास्करः इति। अस्मिन् दिने अदितिकश्यपयोः गर्भात् सूर्यः उद्भूतः सन् मायां अन्धकारं विनाश्य कान्तिपुञ्जं प्रसरितवान् इत्यतः अस्याः तिथेः 'सूर्यमातृका' इत्यपि नाम श्रूयते। अत एव ''रथसप्तमी'' इति भारतीयप्रमुखपर्वसु एकं दिनम्।

**'सूर्यग्रहणतुल्या सा शुक्ला माघस्य सप्तमी।**
**अरुणोदयवेलायां स्नानं तत्र महाफलम्।।**
**माघे मासि सिते पक्षे सप्तमी कोटिपुण्यदा।**
**कुर्यात् स्नानर्घ्यमायुरारोग्यसम्पदः।।'** इति स्मृत्युक्तदिशा या माघमासीयशुक्लसप्तमी सा सूर्यग्रहणसमाना, यथा ग्रहणादिषु स्नान-अर्घ्यादीन् कुर्मः, तद्वत् अस्याम् अनन्तपुण्यप्रदायां तिथावपि आयुरारोग्यादिसम्पदः प्राप्त्यै कुर्यात् इत्यवगम्यते। किञ्च धर्मसिन्ध्वादिग्रन्थेषु यः षष्ठ्यां तिथौ रात्रौ उपवासं कृत्वा सप्तम्यां अरुणोदयकाले स्नानमाचरति सप्तजन्मकृतपापविमुक्तः, समस्तदुःखदूरः, इहजन्मनि जन्मजन्मान्तरेषु वा मनसः, वचसः, शरीरतः ज्ञनतोऽज्ञानतो वा आचरित पापास्पृष्टो भवति। सः च मातापित्रोः कुले सप्तजनान् उद्धरति इति दृश्यते।

**उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान्।**
**स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ।।** इति।
**तस्यां स्नानं महाफलम्।**
**प्रयागे यदि लभ्येतं कोंटिसूर्यग्रहैस्सदा।**
**तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी।**
**एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम्।**
**मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः।**
**केशवादित्यमालोक्य क्षणान्निष्कल्मषो भवेत्।।** इति

तस्मिन् दिने यः सूर्यदेवस्य स्वर्णविग्रहं साश्वरथे संस्थाप्य दानं करोति सः अखण्डस्य भूमण्डलस्य चक्राधिपत्यं प्राप्नोति। तदा पुण्यस्नानकरणे अनासक्तैः जनैः जलस्पर्शकरणात् पूर्वमेव इक्षुदण्डेन जलमालोड्य, शिरसि स्वर्णस्य रजतस्य वा अलाबुदीपपात्रे तिलतैलवर्तिभिः ज्वालितं दीपं संस्थाप्य सूर्यदेवस्य ध्यानं कुर्युः। अनन्तरं जलेन तर्पणं कृत्वा तं दीपं जले प्रवाहयेयुः। अनन्तरम् अर्कबदरीपर्णानि, अक्षताः, चन्दनं योजयित्वा सूर्यनारायणाय अष्टाङ्गविधिना अर्घ्यं समर्पयेयुः। रक्तवर्णस्य चन्दनेन कर्णिकासहितम् अष्टदलयुक्तं पद्म रचयेयुः। तस्य पूर्वादिषु दलेषु प्रदक्षिणप्रकारेण रवि-भानु विवस्वत् भास्कर सवितृ अर्क सहस्रकिरण सर्वत्मकेत्येतैः नामभिः अर्च्यमानं सूयदेवं पूजयेयुः।

**सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम्।**
**श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम्।।** इति प्रार्थयेयुश्च।

**सूर्यपक्षेः -** 'सप्त'नामकाश्वसयुते रथे अलङ्कृतं, भीकररश्मियुतं, कश्यपादित्योः सुतं, श्वेतपद्मधरं, सूर्यंः प्रकाशमानं दिवाकरं नमामि इति।

**श्रीनिवासपक्षे -** शवति वहति चेति श्वः। न श्वः अश्वः पर्वतः। सप्ताश्वरथं = सप्तपर्वतयुतं रथं आरुह्य विराजमानं, प्रचण्डं दुष्टभीकरं, कृष्णाद्यवतारेषु कश्यपादित्योः पुत्रं, श्वेतपद्मासनत्वात् श्वेतपद्मां लक्ष्मीं धृतं, देवदेवेशं, सहस्रसूर्यसमं प्रकाशमानं श्रीश्रीनिवासं नमामि इत्युभयोः पक्षयोः प्रतिपादयितुं शक्यते इति गोचरयितुमिव भूलोकवैकुण्ठे तिरुमले रथसप्तमीपर्वदिने १. सूर्यप्रथवाहनम् २. लघुशेषवाहनम् ३. गरुडवाहनम् ४. हनुमद्वाहनम् ५. कल्पवृक्षवाहनम् ६. सर्वभूपालवाहनम् ७. चन्द्रप्रभवाहनम् इत्येवं सप्तवाहनेषु उत्सवं एकस्मिन्नेव दिने कुर्वन्ति। वस्तुतः स्वामिनः ब्रह्मोत्सवे एकैकस्मिन् दिने एकैकोत्सवः इत्येवं प्रचलति। परन्तु अस्मिन् दिने सप्तोत्सवाः प्रचलन्ति इत्यतः इदं पर्व लघुब्रह्मोत्सवनाम्नापि विख्यातम्। एतादृशमहामहिम्नि सूर्ये सन्निहितः श्रीश्रीनिवासः, आरोग्यदातेति विख्यातः सूर्यभगवान् च अस्मासु स्वदृष्टिं प्रसार्य मनस्तापादीन् निवार्य आरोग्यभाग्यं, ज्ञानभक्तिवैराग्यं च प्रसीदतु इति प्रार्थयामहे।






# गीताप्रस्थानम्

- कुमारी पार्वती वि.जे.
चरवाणी - ९९४७६०४७०२

उपनिषदां तात्पर्यं ततोपि सरलतया साधारणजनान् ज्ञापयितुं प्रवर्तते स्मृतिप्रस्थानम् उत गीताप्रस्थानम्। उपनिषन्मन्त्रेषु यत् आत्मतत्त्वं बोधितं तदेव गीताप्रस्थाने अपि प्रपञ्चितम्। इतिहासग्रन्थस्य महाभारतस्य भीष्मपर्वणि वर्तमाना अष्टादशाध्यायिनी श्रीमद्भगवद्गीता एव गीताप्रस्थानमिति प्रथितं लोके। श्रीमद्भगवद्गीता भारतीयसंस्कृतेः प्राणभूता, गुणगौरवा च वरीवर्ति। स्वजनानां मरणभिया युद्धात् उपरमन्तम् अर्जुनं निमत्तीकृत्य सर्वलोकहितार्थं स्वयं भगवता नारायणेन प्रदत्तोपदेशः गीताशास्त्रे उद्धृतः। श्रीमद्भगवद्गीता दर्शनानां सारभूता आदर्शरूपा सर्वजनग्राह्या च अस्ति। कथितञ्च -

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।** इति।

श्रीमद्भगवद्गीतायां समस्तवेदार्थः अन्तर्भवतीति आचार्यशङ्करभगवत्पादैः गीताभाष्ये प्रतिपादितम् यथा 'तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्? इति।

भगवद्गीतायां ज्ञानमार्गः, भक्तिमार्गः, कर्ममार्गः, राजयोगः, विभूतियोगः, विराट्स्वरूप्रवर्णनं, गुणत्रयनिरूपणम् इत्यादीनां विषये सुष्ठु वर्णितमस्ति। एवं मानवानां नित्यजीवनोपयोगित्वेन अनेके विषयाः गीतायामस्यां निरूपितास्सन्ति अत एव आभारतीयैरपि उदात्तग्रन्थरूपेण गीतेयं स्वीकृता।

भूरिशः जनाः अपि भगवद्गीतामेव गीतारूपेण जानन्ति। यद्यपि गीताशब्दः श्रीमद्भगवद्गीतायामेव प्रथितः तथापि महापुराणेतिहासादिषु ग्रन्थेषु उपनिषद्सारभूताः अनेकाः गीताः समुपलभ्यन्ते। स्त्रीशूद्रादिसाधारणजनानाम् उद्बोधनाय प्रवृत्ताः आध्यात्मिकविद्याप्रतिपादिकाः गीताः भारतीयसंस्कृतौ उत्कृष्टं स्थानम् अलङ्कुर्वन्ति। गीताशब्दस्यार्थः विविधेषु ग्रन्थेषु दृश्यते यथा -

**वाचस्पत्ये** - गै कर्मणि क्त इति गुरुशिष्यकल्पनया च आत्मविद्योपदेशात्मके कथाविशेषे सा च भगवद्गीतासामगीतादिभेदात् बहुधा किन्तु भगवद्गीतायामेव प्रसिद्धिः इति।

**शब्दकल्पद्रुमे** - गीयते स्म आत्मतत्त्वोपदेशात्मिका ब्रह्मतत्त्वोपदेशमयी कथा यत्र सः ग्रन्थविशेषः इति।

**अमरकोशे** - गानमेव गीता इति।

इतिहासपुराणोपुराणेषु षड्त्रिंशत् (३६) गीताः सन्ति। महाभारते षोडशगीताः सन्ति। पुराणेषु विंशतिगीताः तथा अन्याश्च चतस्रः गीताः विख्याताः सन्ति।

**महाभारतम् -**

चतुर्णां वेदानां सारभूतं महाभारतं भारतीयसामाजिकप्रथायाः अविभाज्यघटकम् अस्ति। "महद्भारतं महाभारतम्, महान्तं भारं तनोतीति महाभारतम्" इति महाभारतस्य व्युत्पत्तिः विविधरूपेण श्रूयते। जयम् , जयाख्यसंहिता, भारतम्, महाभारतम् इति महाभारतस्य पर्यायाः। श्रीव्यासमहर्षिणा प्रणीते अस्मिन् ग्रन्थे एकलक्षश्लोकाः सन्ति। एतदेव शतसाहस्रीसंहिता इत्यप्युच्यते भारतस्य सामाजिकप्रथा, संस्कृतिः, नीति-नियमाः, धार्मिकता, आध्यात्मिकता, खगोलविज्ञानम् इत्याद्यनेके विषयाः अस्मिन् प्रपञ्चिताः। अष्टादशपर्वस्वन्यतमे भीष्मपर्वणि विद्यते विश्वविख्याता श्रीमद्भगवद्गीता। भगवद्गीतावत् अन्याः पञ्चदश गीताः वर्तन्ते महाभारते। तद्यथा - 'उतथ्यगीता, वामदेवगीता, ऋषभगीता, षड्जगीता, संपाकगीता, मङ्कगीता, बोध्यगीता, विचिख्नुगीता, हरितगीता, वृत्रगीता, पराशरगीता, हंसगीता, ब्रह्मगीता, ब्राह्मणगीता' चेति।

**पुराणेषु गीता -** अपौरुषेयेषु वेदेषु निहितं तत्त्वं प्रौढमतिभिरेव अवगम्यते न तु कोमलबुद्धिमद्भिः। वेदप्रतिपादितानां तत्त्वानां मानवबुद्धिप्रवेशार्थं पुराणानां सरलभाषया शैल्या च रचना कृता। तत्र भारतस्य इतिहासः, सृष्टिप्रलयादिकं, धर्मः, ऋषीणां राज्ञां च वृत्तम् इत्यादयः अवगन्तव्याः सर्वेपि विषयाः ज्ञापिताः इत्यतः एव तत् भारतीयज्ञानकोशात्मकम् इति आख्यायते।

भागवतपाद्मस्कान्दनारदादिपुराणेषु आध्यात्मिकतत्त्वो-पदेशात्मिकाः अनेकाः गीताः वर्तन्ते।

**भागवतपुराणे** - कपिलगीता, उद्धवगीता, श्रुतिगीता इत्याद्याः।

**पद्मपुराणे** - शिवगीता
**देवीपुराणान्तर्गता** - देवीगीता
**स्कन्दपुराणे** - ब्रह्मगीता
**अग्निपुराणे** - यमगीता
**कूर्मपुराणे** - ईश्वरगीता इत्यादयः गीतास्वन्यतमाः।

**भागवतपुराणान्तर्गताः गीताः-** भक्तिप्रधानभूते भागवते तत्त्वभूयिष्ठाः नव गीताः विद्यन्ते। ताः यथा - कपिलगीता, देवर्षिगीता, ब्राह्मणगीता, शुकगीता, नवयोगीश्वरगीता, उद्धवगीता, अवधूतगीता, हंसगीता, श्रुतिगीता।

**१.कपिलगीता -** श्रीमद्भागवतस्य तृतीयस्कन्दे वर्तते इयं गीता। गीतायां भगवान् कपिलः स्वमात्रे देवहूतये नवभिरध्यायैः आत्मतत्त्वोपदेशं ददाति।

अत्र भक्तियोगनिरूपणं, महत्तत्वादीनामुत्पत्तिक्रमेण सृष्टिप्रक्रियावर्णनं, सद्धर्मप्रतिपादनं, मोक्षनिरूपणं, भक्तियोगेन प्रकृतेः तिरोधानकथनं, सबीजयोगलक्षणं, भगवतः श्रीविग्रहस्य ध्यानवर्णनं, भक्तियोगस्य रहस्यं, कालप्रभावकथनं, देहगेहासक्तजनानाम् अधोगतिप्रतिपादनं, मातुः कुक्षौ प्रविष्टस्य जीवस्य देहप्राप्तिक्रमः, जीवस्य बाल्याद्यवस्थोत्पन्नानां क्लेशानां निरूपणं भक्तियोगस्य उत्कर्षः इत्याद्यनेके विषयाः अस्यां गीतायामुपलभ्यन्ते।

**२. देवर्षिगीता -** श्रीमद्भागवतस्य चतुर्थस्कन्धे पञ्चविंशाध्यायादारभ्य एकत्रिंशाध्यायपर्यन्तं देवर्षिगीतेत्युच्यते। तत्र राजानं प्राचीनबर्हिषं ज्ञानोन्मुखं कर्तुं देवर्षिर्नारदः तम् अध्यात्मसंवादेन प्रत्यबोधयत्। देवर्षिर्नारदः कर्मणां संसारबन्धहेतुकत्वम् एव अस्ति न मुक्तिसाधकत्वम् इति महाराजानं बोधयितुं पुरञ्जनोपाख्यानं श्रावयति। अयमेव प्रसङ्गः अस्यां गीतायां प्रतिपादितः।

(अवशिष्टम् अग्रिमसञ्चिकायां)

# देवुनिकडपा
# श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः
# ब्रह्मोत्सवः

२०२१ फिब्रवरि
१३ तः २१ पर्यन्तम्



**१२-०२-२०२१ भृगुवासरः**
प्रातः - दिक्षा तिरुमञ्जनम्
रात्रौ - सेनाधिपत्युत्सवः अङ्कुरार्पणम्

**१३-०२-२०२१ मन्दवासरः**
प्रातः - तिरुच्चि उत्सवः, ध्वजारोहणम्
रात्रौ - चन्द्रप्रभवाहनम्

**१४-०२-२०२१ भानुवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - महाशेषवाहनम्

**१५-०२-२०२१ इन्दुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - सिंहवाहनम्

**१६-०२-२०२१ भौमवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - हनुमद्वाहनम्

**१७-०२-२०२१ सौम्यवासरः**
प्रातः - मौक्तिकमण्टपवाहनम्
रात्रौ - गरुडवाहनम्

**१८-०२-२०२१ बृहस्पतिवासरः**
प्रातः - कल्याणोत्सवः
रात्रौ - गजवाहनम्

**१९-०२-२०२१ भृगुवासरः**
प्रातः - रथोत्सवः
रात्रौ - धूल्युत्सवः

**२०-०२-२०२१ मन्दवासरः**
प्रातः - सर्वभूपालवाहनम्
रात्रौ - अश्ववाहनम्

**२१-०२-२०२१, भानुवासरः**
प्रातः - वसन्तोत्सवः, चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्, हंसवाहनम्

तिरुमलतिरुपतिदेवस्थानम्

# श्रीनिवासमङ्गापुरस्थ श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

२०२१ मार्च्
०२ तः १० पर्यन्तम्



**०१-०३-२०२१ इन्दुवासरः**

रात्रौ - सेनाधिपत्युत्सवः, अङ्कुरार्पणम्

**०२-०३-२०२१ भौमवासरः**

प्रातः - तिरुच्चि उत्सवः, ध्वजारोहणम्

रात्रौ - महाशेषवाहनम्

**०३-०३-२०२१ सौम्यवासरः**

प्रातः - लघुशेषवाहनम्

रात्रौ - हंसवाहनम्

**०४-०३-२०२१ बृहस्पतिवासरः**

प्रातः - सिंहवाहनम्

रात्रौ - मौक्तिकमण्टपवाहनम्

**०५-०३-२०२१ भृगुवासरः**

प्रातः - कल्पवृक्षवाहनम्

रात्रौ - सर्वभूपालवाहनम्

**०६-०३-२०२१ मन्दवासरः**

प्रातः - आन्दोलिकायां मोहिन्यवतारः

रात्रौ - गरुडवाहनम्

**०७-०३-२०२१ भानुवासरः**

प्रातः - हनुमद्वाहनम्, सायं - वसंतोत्सवः

रात्रौ - गजवाहनम्

**०८-०३-२०२१ इन्दुवासरः**

प्रातः - सूर्यप्रभवाहनम्

रात्रौ - चन्द्रप्रभवाहनम्

**०९-०३-२०२१ भौमवासरः**

प्रातः - रथोत्सवः

रात्रौ - अश्ववाहनम्

**१०-०३-२०२१, सौम्यवासरः**

प्रातः - पल्यङ्कोत्सवः, तिरुच्चि उत्सवः, तीर्थावभृतस्नानोत्सवः, चक्रस्नानम्

रात्रौ - तिरुच्चि उत्सवः, ध्वजावरोहणम्

# तिरुपतिस्थ श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवः

२०२१ मार्च्
०४ तः १३ पर्यन्तम्





०३-०३-२०२१ सौम्यवासरः
रात्रौ - मूषकवाहने विनायकस्वामी, अङ्कुरार्पणम्

०४-०३-२०२१ बृहस्पतिवासरः
प्रातः - पल्यङ्कोत्सवः, ध्वजारोहणम्
रात्रौ - हंसवाहनम्

०५-०३-२०२१ भृगुवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

०६-०३-२०२१ मन्दवासरः
प्रातः - भूतवाहनम्
रात्रौ - सिंहवाहनम्

०७-०३-२०२१ भानुवासरः
प्रातः - मकरवाहनम्
रात्रौ - शेषवाहनम्

०८-०३-२०२१ इन्दुवासरः
प्रातः - अधिकारनन्दिवाहनम्
रात्रौ - तिरुच्चि उत्सवः

०९-०३-२०२१ भौमवासरः
प्रातः - व्याघ्रवाहनम्
रात्रौ - गजवाहनम्

१०-०३-२०२१ सौम्यवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - तिरुच्चि उत्सवः

११-०३-२०२१ बृहस्पतिवासरः
प्रातः - रथोत्सवः
रात्रौ - नन्दिवाहनम्, महाशिवरात्रिः

१२-०३-२०२१ भृगुवासरः
प्रातः - पुरुषामृगवाहनम्
रात्रौ - कल्याणोत्सवः, अश्ववाहनम्

१३-०३-२०२१ मन्दवासरः
प्रातः - सूर्यप्रभवाहने नटराजस्वामी, त्रिशूलस्नानम्
रात्रौ - ध्वजावरोहणम्, रावणासुरवाहनम्

तिरुमलतिरुपतिदेवस्थानम्



# तिरुपतिस्थ
# श्रीकोदण्डरामस्वामिनः
# ब्रह्मोत्सवः

२०२१ मार्च्
१३ तः २१ पर्यन्तम्

**१२-०३-२०२१ भृगुवासरः**
रात्रौ - सेनाधिपत्युित्सवः, अङ्कुरार्पणम्

**१३-०३-२०२१ मन्दवासरः**
प्रातः - तिरुच्चि उत्सवः, ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१४-०३-२०२१ भानुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१५-०३-२०२१ इन्दुवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

**१६-०३-२०२१ भौमवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**१७-०३-२०२१ सौम्यवासरः**
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

**१८-०३-२०२१ बृहस्पतिवासरः**
प्रातः - हनुमद्वाहनम्,
सायं वसंतोत्सवः रात्रौ - गजवाहनम्

**१९-०३-२०२१ भृगुवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**२०-०३-२०२१ मन्दवासरः**
प्रातः रथोत्सवः
रात्रौ - अश्ववाहनम्

**२१-०३-२०२१, भानुवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवः, ध्वजावरोहणम्

# पुराणेषु श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



'दासरेन्दरे पुरन्दरदासरय्य' इति गुरुभिः श्रीव्यासराजतीर्थगुरुसार्वभौमैः सगौरवं प्रथां प्राप्तवन्तः 'पुरन्दरदासाः' साक्षात् 'नारदमहामुनीनां' अंशभूताः इति जगति प्रसिद्धिः। एवं विजयदासाः गुरुस्तुत्यां मन्मथजनकस्य सन्निधाने अविच्छिन्नतया गीयमानाः नारदमहामुनयः एव पुरन्दरदास इति दृष्टवन्तः इति स्तुतवन्तः।

'मारजनकन सन्निधानदि सारेगानव माडुव। नारदरे ईरूपदिन्दलि चारु दरुशन तोरिद' इति। भगवतः श्रीहरेः संकल्पानुसारं श्रीनिवासनायकः इति नाम्ना अवतीर्णाः एते नवकोटिसम्पदमपि तृणप्रायं मत्वा त्यक्त्वा च व्यासराजतीर्थैः 'पुरन्दरविठल' इति अङ्कितनाम प्राप्य, तदारभ्य वेद-शास्त्रादीनां साहाय्येन पद्य-सुळादि इत्यादि सप्ततिसहस्रोत्तरचतुर्लक्षकीर्तनानि विरच्य, भारते सर्वत्र सप्रमाणकं पुण्यक्षेत्राणां दर्शनेन तत्तद्देवता, नदी, श्रीमन्मध्वाचार्यादिगुरूणां स्तुतिपरकाणि कीर्तनानि, वेदान्तग्रन्थोक्तीः उपनिषदि प्रस्तुतान् विषयान् यथा सन्दर्भं संगृह्य प्रभु-मित्र-कान्तादिवत्, द्राक्षा-कदली-नारिकेल पाकवत् सज्जनानां साहाय्यार्थं प्रगीतवन्तः। कर्नाटकसंगीतपितामह इति प्रसिद्धानां एतेषां कीर्तनानि न केवलं भजनसम्प्रदाये अपि तु देशी-मार्गसम्प्रदाय-शास्त्रीयसंगीतविधावपि गातुमनुकूलकराः सन्ति। एवमेव नाट्यरङ्गेष्वपि एतेषां कीर्तनानि बहुधा उपयुज्यन्ते। साहित्यपरतया वा सङ्गीतपरतया वा एतानि कीर्तनानि भावगर्भितानि शोभन्ते। कानिचन कीर्तनानि गात्रपरतया लघ्व्योऽपि अर्थपरतया जलनिधिरिव शोभते। एतेषां कीर्तनेषु कृतिषु साहित्यसौन्दर्यमपि अतिशोभते। तत्र नाटकशैली, रमणीयार्थसिञ्चकशब्दपुञ्जाः, दीर्घसमासोपेताः शब्दाश्च परिशोभन्ते। काव्याग्रेसराणां, वाग्गेयकारणां एतेषां भक्तेः निरूपकमिव पण्डरिनाथः श्रीश्रीनिवासश्च साक्षात्कृतौ इति ऐतिह्यम्। 'परमपुरुषनु विप्रनन्ददि करवनीडि याचिसे' इति परमपुरुषः श्रीनिवासः विप्ररूपेणागत्य पृष्टवानिति विजयदासाः एतान् स्तुतवन्तः। एवमेव श्रीनिवासः भक्तवेषेण रात्रौ समागम्य जलं, अप्पण्ण इति शिष्यरूपेण घृतं आनीय समाराधने इव परिवेषितवान् इति ज्ञायते।

सण्णवनेन्दु ना नीरु तारेन्दरे
बेण्णे कळ्ळ कृष्ण मरुळुमाडि।
चिन्नद गिण्डलि नीरन्नु तन्दरे
कण्णुकाणदे नाठोणदे पण्डरिराय।।

बालक इव मत्वा तदा जलं पृष्ठमिति कारणात् हे कृष्ण! सुवर्णपात्रे जलं दत्तवानिति।

अप्पण्ण भागवतन रुपवु तानागि
तुप्पद बिन्दिगे तन्दे सर्पशयनन।।

अप्पण्ण भागवतरूपेण घृतमानीतवानिति।।

भक्तवश्यः, हरिदासानां सुवर्णनिधिः इति प्रसिद्धः श्रीवेङ्कटेशः, तं पुरन्दरदासाः जीवने अनेकवारं संदर्श्य तिरुमलक्षेत्रं, क्षेत्राधिपतिं श्रीनिवासं, आलयं, परिसरं तथा पुष्करिणीत्याद्यनेकान् विषयाम् प्रतिपादितवन्तः। पुरन्दरदासानां कृतिषु

श्रीनिवाससंबद्धेषु 'दासनमाडिको यन्न स्वामि सासिरनामद वेङ्कटरमण(नादनमनक्रिया), श्रीनिवासा नीने पालिसो श्रितजनपाला(आनन्दभैरवि), बारय्य वेङ्कटरमण(सावेरि), वेङ्कटरमण वेदान्तनिन्नयपाद(आरभि), बन्दुनिन्तिह नोडि (मध्यमावति), दणियनोडिदेनु (कापि), तिरुपति वेङ्कटरमण (स्वरहरप्रिय)' इत्यादयः प्रसिद्धाः।

'श्रीनिवासनु ओलियनु केळो ज्ञानापोर्जने माडदले, नानेनु माडिदेनो वेङ्कटराय, कनसु कण्डेने मनदलि कळवळगोण्डेने, वेङ्कटरमणने बारो शेषाचलवासने बारो, वेङ्कटेशनिन्न नामके, तप्पुगळेल्ल नीनोप्पिकोळ्ळो, निन्नने नंबिदे नीरजनयन, कण्डे कण्डे स्वामिय बेडिकोण्डे पङ्कजमुखियरेल्लरु बन्दु लक्ष्मीवेङ्कटरमणनिगे आरुति एत्तिरे' इत्येतानि गीतानि जनसामान्येषु तथा संप्रदायसंगीतकारेष्वपि संदृश्यन्ते। भक्त्यब्धेः चन्द्रवद्रोचमानानि एतानि गीतानि श्रीनिवासस्य सार्वभौमाधिपत्यम्, सर्वोत्तमत्वम्, सत्सिद्धान्तविषयाम् संप्रदायानुसारेण प्रकटयन्ति। पुरन्दरदासाः तिरुमलक्षेत्रमागत्य श्रीनिवासं दृष्टवन्तः। तदा एतेषां मनसि प्रकटितानां भावनानां विषये एवं प्रस्तुताः -

'कण्डे कण्डे स्वामिय बेडिकोन्डे।
कन्डे तिरुपतिय वेङ्कटेशन कारणात्मक सार्वभौमन।
कामितार्थगळीवदेवन। करुणानिधि एन्देनिसि मेरेवने।।

तिरुपति वेङ्कटेशः कारणात्मकः, सार्वभौमः, कामितार्थप्रदः, करुणानिधिः इति प्रसिद्धः सः मया दृष्टः। अहो दृष्टः इति।

'कोटिसूर्यप्रकाशवेनिप किरीटवनु मस्तकदि कन्डेनु
नोटकाश्चर्यवाद नगेमुशनोसळोलगे तिरुमणिय कन्डेनु।
साटियिल्लद शङ्ख चक्र चतुरहस्तदलिरलु कण्डेनु
बूटकदमातल्ल केळिरो भूरिदैवद गण्डनंघ्रिय।।'

कोटिसूर्यसमप्रभं किरीटम्, आश्चर्यकारकम् समन्दहासमुखं तेन सह शोभायमानं ललाटे विराजमानं तिरुमणिं, चतुर्भुजेषु द्वयोः शङ्खचक्रौ धृत्वा रमन्तं सकलदेवतानां परमदैवं तं श्रीनिवासं तस्य पादपद्मे च दृष्टवान्।

'तप्पुकाणिके कप्पगळनु समस्त द्वीपदलिन्द तरिसुव
उप्पु ओगरगळने मारिसि उचितदिन्दलि हणवगळिसुव।
इप्पत्तु दुड्डिगे सेरु तीर्थव ओप्पदलि क्रयमाडि कोडिसुव।
सर्पशयन सार्वभौमन अप्प तिरुपति वेङ्कटेश।।''

समस्तद्वीपेभ्यः भक्तैः आनीयमानद्रव्याणि स्वीकर्तारम्, दध्योदनादीन् भक्तेभ्यः प्रसादरूपेण प्रदानद्वारा तेभ्यः उपहरणानि स्वीक्रियमाणं सर्पशयनं सार्वभौमं तिरुपति वेङ्कटेशं ददर्श।

'उरदि श्रीदेवियळ कन्डेनु उन्नतद कौस्तुभव कन्डेनु
गरुड-किन्नर-नारदादि गन्दर्वर एडबलदल्लि कन्डेनु
तरतरदि भक्तरिगेवरगळ करेदु कोडुबुदु निरुत कन्डेनु
शरदिशयन शेषगिरिय वरद पुरन्दरविठलनंघ्रिय।।'

स्वामिनः वक्षस्थले प्रकाशमानं कौस्तुभमणिं, श्रीदेवीं, इतस्ततः भक्तिविनम्रादिभिः सह स्थित गरुडकिन्नरनारदादीन्, स्वामिनः अग्रे विविधभक्तान्, तेभ्यः वरप्रदानं, शेषशेयनं पुरन्दरविठलं श्रीवेङ्कटेशं, तस्य पादपद्मेपि ददर्श।

(अवशिष्टम् अग्रिमसञ्चिकायां)



# महाद्भुतानि वर्णनानि

- नण्डूरि सत्यनारायणः
चरवाणी - ९६५२०४४६८०



लोककल्याणार्थं सर्वाण्यपि शास्त्राणि परमात्मना दिव्यसूरिभ्यः दिक्पालकेभ्यः ऋषिभ्यश्च आविष्कृतानि। तेषु शास्त्रेषु विभिन्नेषु अन्यतम् आगमशास्त्रं भगवद्यजनप्रतिपादकं विशिष्टम्। एतत् भगवच्छास्त्रमिति प्रथितचरम्।

विष्णुपरदैवतमभिलक्ष्य दक्षिणभारते द्वौ आराधनसम्प्रदायौ पाञ्चरात्रवैखानसौ इति वर्तेते। पाञ्चरात्रसंहितासु अन्यतमा वैहायसीसंहिता श्रेष्ठा। संहिता इयं भगवता नारायणेन गरुडाय दिव्यसंहितेति नाम्ना उपदिष्टा।

गन्थेस्मिन् कानिचन महाद्भुतानि वर्णानानि कृतानि। तन्येव वैकुण्ठधाम - वैकुण्ठनाथ (नारायण) लक्ष्मी (सर्वलोकजननी) सालवृक्ष (भगवतः सदृशः) क्षेत्रवर्णनानि।

मोक्षमार्गोपदेशे प्रथमं श्रीवैकुण्ठवर्णनं सङ्ग्रहेण क्रियते।

तद्यथा -

सर्वप्राकुतिकात कार्यादतीते दिव्यशाब्दिते।
भुर्भुवस्वरातिकान्ते परमव्योमनिर्मले।।
सनकविधिरुदाणां वाचो मनसोऽगोचरे।
अचिन्त्यैश्वर्यभावानां नित्यसिद्धैश्च सेविते।।
वैदूर्यहेमरत्नानां स्तम्भसाहस्रकोटिभिः।
मन्दारकुन्दपुन्नागचम्पकसंयुते।।
नानागन्धैर्मृदुस्पर्शैः धूपैः पुष्पैश्च शोभिते।
हंसशुकादिरूपेण सारिकाबर्हिकोकिलैः।।
कोमलैः कूजितैर्दिव्योद्यानशतैस्समावृते।
चन्दनागरुकर्पूरधूपानिलसुसेविते।।
प्रकृतिगन्धलेशोऽपि यत्र न दृश्यते क्वचित्।
सर्वं विष्णुमयं तत्र वैकुण्ठरूपपार्षदाः।।

भूर्भुवस्वरादि लोकानामुपरि सर्वेभ्यो प्रकृतिकार्येभ्यो महदादिभ्यः अतीतम् अत्यन्तं विशुद्धं परमव्योम इति प्रसिद्धं दिव्यधाम वैकुण्ठपदम्। तच्च सनकाद्यैः ब्रह्माणा रुद्रेण च वाचा वर्णयितुं मनसा अभ्यूहितुमपि न शक्यम्।

केचन दर्शनलालासाः कतिपय वैकुण्ठनाथस्तवलालसाः केचन कैङ्कर्यलालसाः पारिषदरूपैः सर्वैः वैकुण्ठे परिवेष्टिताः प्रभोर्वचनाय। तत्स्थानं एवं प्रकारेण दिप्तिमत् समलङ्कृतम्।

हर्म्यैर्वा धामसौन्दर्ये विविधवैदूर्यादि रत्नमयसुवर्णस्तम्भकोटिभिः विराजमानं मनोहरं हर्म्य - सुन्दरोद्यानसंयुतं दिव्यं श्रीवैकुण्ठपदम्। मन्दारकुन्दपुन्नागचम्पकवृक्षजातं; धूपागरुचन्दनसंसर्गयुतं परिमलं मन्दमारुतं सर्वत्र धाम्नि परिव्याप्तं यत्र तत्स्थानं वैकुण्ठम्।

तत्र दिव्ये धाम्नि प्राकृतिकगन्धलेशोऽपि क्वचित् नैव दृश्यते। तत्स्थानं सर्वं विष्णुमयं तादृशं पुण्यप्रदं वैकुण्ठं परमपदं विभासते।

इतस्ततः वैकुण्ठनाथवर्णने वैहायस्याम् एवमुक्तम्।
''यस्मिन् भगवद्धाम्नि भगवान् शब्दगोचरः।

वैकुण्ठो वाऽऽथपुरुषः नानाभूषणभूषितः॥
अनन्तभोगिपर्यङ्के महारत्नमये स्थितः।
विष्वक्सेनादिभिर्मुख्यैः तार्क्ष्यसुदर्शनादिभिः॥
संसेविताङ्घ्रिकमलो वेदवेद्योऽतिनिर्मलः।
आत्मकान्त्या जगत् सर्वमाप्ययन् पुरुषोत्तमः॥''
(वैहा. सं, १/१०, १२.)

वैकुण्ठधाम्नि भगवान् नारायणः नानाभूषणभूषितः महारत्नखचिते अनन्तभोगिपर्यङ्के विराजमानः स्थितः। अयमेव श्रुत्यादिभिः प्रतिपादितः। वेदवेद्योऽतिनिर्मलः श्रीभूनीलाशेषनागविष्वक्सेनगरुडैः सुदर्शनशङ्खचक्रगदाशार्ङ्गैः संसेव्यमानाङ्घ्रिकमलोऽयं परमपुरुषः इत्यभिवर्ण्यते।

सर्वलोकजनन्याः महालक्ष्याः वर्णने विभोस्तुल्या समाऽभिवर्ण्यते।

शीलरूपगुणोस्तुल्या विलासाद्यैश्च तत्समा।
पद्मजा सर्वलोकस्य जननी सागरात्मजा॥
यस्याः कृपाकटाक्षं तु नित्यमिच्छन्त्यकामिनः।
श्रीर्हरिणा समासीना यत्र नित्यं विराजते॥
वैहा.सं.१य१३.१४

पद्मजा सागरात्मजा इति द्वाभ्यां नामभ्यां महालक्ष्मीसंज्ञा श्रीहरिणा सहासीना नित्यं विरजते। शीलरूपगुणादिभिः विष्णुना समा विलासादियुता सा सम्भूया राराजते। तस्याः कृपाकटाक्षं तु नारायणप्राप्तिकामैः भक्तैः काङ्क्ष्यते। तादृशी रमा श्रीहरिणा सह परमपदे नित्यं विराजमाना वर्णिता।

इदानीं प्रकृत्याः सालग्रामवृक्षमाहात्म्यं सौन्दर्यातिशयं चापि श्रीमन्नारायणस्मरणसमं पुण्यप्रदमित्येवं कीर्त्यते। तद्यथा -

त्रिवेणीसङ्गमे तीर्थे सिगद्धगन्धर्वसेविते।
यत्राह सालवृक्षेण रुपेणऽवस्थितेऽस्मि नु॥
नानापक्षिगणैर्युक्तं नानामगनिषेवितम्।
सालग्राम इति ख्यातं सालवृक्षोपशोभितम्॥
तरुपुष्पसमाकीर्णं शुभं तीर्थान्तरान्वितम्।
अपश्यत् तीर्थराजं तं महर्षिश्चोर्ध्वरेतसः।
तपस्यातत्परान् प्राज्ञान् हरिध्यानैकतत्परान्॥

भरतखण्डेऽस्मिन् उतरेकोणे त्रिवेणीतीर्थसङ्गमे दिव्यानि क्षेत्राणि नैकानि नदीतीरे विराजन्ते। तेषु क्षेत्रेषु सालग्राम इति मुख्यतमं प्रातःस्मरणीयं; न तु केवलं यत्र तु वृक्षरूपोऽयं भगवन् नारायणः स्मृतः। क्षेत्रे सालाग्रामे नानमृगाः नानापक्षिसमूहः नैके सालवृक्षाः समावृताः यतस्ततः मुमुक्षुजनाः भरद्वाजादयः नारायणं सर्वदा तपश्चरन्ति।

एतानि वर्णनानि एवं पाञ्चरात्रवैहायसीसंहितायां चतुर्विधानि धाम - देवदेव - लक्ष्मी वृक्षादीनां महाद्भुतानि वर्णनानि श्रीमन्नारायणेण परमदयालुना अनुगृहीतानि।





परमात्मने सततमेकरूपिणे
दशरुपिणे शतसहस्ररूपिणे।
अविकारिणे स्फुटमन्तरूपिणे
सुखचित्समस्ततनवे नमो नमः॥

(सुमध्वविजयः ८ सर्गे)

परमात्मा ज्ञानानन्दादिस्वरूपः निरतम् एकरूप एव। मत्स्यकूर्मादिरुपेण दशरुपी प्रसिद्धः। कपिलबुद्धाद्यनेकरूपेण शतरूपः, सहस्ररूपः, शतसहस्ररूपः, लक्षादिरुपश्च। अथवा दशादिशब्दाः पूर्णतासूचकाः चेत् पूर्णानन्दादिमान् अनन्तरूपी सन्नपि अविकारी, समस्तान्तर्गतः भगवान् श्रीमन्नारायणः। तादृशाचिन्त्याद्भुतशक्तिमते भूयांसि नमांसि।



# हरिणवायसयोः स्नेहः

- श्रुति के.बि.

चरवाणी - ९३९१९२८४४२

कस्मिंश्चित् अरण्ये कश्चन हरिणः निवसति स्म। कश्चन काकः हरिणस्य मित्रम् आसीत्।

हरिणः अरण्ये सर्वत्र सञ्चरति हरितानि तृणानि खादति च। अल्पेन एव कालेन सः सुन्दरः पुष्टाङ्गश्च जातः। कदाचित् कश्चन श्रृगालः तत्रागतवान्। हरिणं दृष्ट्वा सः चिन्तितवान् - अहो! कियान् सुन्दरः अस्ति एषः हरिणः, एतस्य शरीरं कथं मांसपूर्णम् अस्ति। यदि एतस्य मांसं खादितुं शक्नोमि तर्हि... अहो! तुष्यामि अहम्। किन्तु केन उपायेन तथा कर्तुं शक्नोमि? सः एकम् उपायं चिन्तितवान्। प्रथमं तस्य मनसि ममोपरि विश्वासम् उत्पादयामि, अनन्तरं कार्यं साधयामि इति। एव विचिन्त्य हरिणस्य समीपं गत्वा सः उक्तवान् - भो मित्र! इदीनीं कुशलं खलु इति। हरिणः पृष्टवान् भवान् कः? शृगालः विनयेन उक्तवान् - अहं क्षुद्रबुद्धिः नाम शृगालः अस्मि। अस्मिन् अरण्ये मम केऽपि बान्धवाः न सन्ति। अतः कथमपि मृतः इव निवसामि। इदानीं तु भवन्त दृष्ट्वा अतीव सन्तुष्टः अस्मि। भवान् एव मम बान्धवः। अहं भवतः सहचरः भवामि इति। तथैव भवतु इति हरिणः उक्तवान्। शृगालः हरिणम् अनुसृतवान्। सायंकाले हरिणः यदा स्वनिवासं गतवान् तदा शृगालः अपि तत्र गतवान्। हरिणस्य गृहस्य समीपे एव एकस्य वृक्षस्योपरि तस्य मित्रं काकः निवसति स्म। शृगालेन सह आगतं हरिणं दृष्ट्वा काकः पृष्टवान् भो मित्र! कः सः अपरिचितः? इति। हरिणः उक्तवान् एषः क्षुद्रबुद्धिः नाम शृगालः अस्ति। अस्माकं स्नेहम् इच्छति सः। अतः मया सह आनीतवान्। काकः वदति - मित्र! भवान् अनुचितं कार्यं कृतवान्। यतः अपरिचितैः सह स्नेहः न करणीयः। अग्रे कष्टाय भवति इति। तत् श्रुत्वा शृगालः कोपेन उक्तवान् - किमेवं वदति भवान्? हरिणस्य प्रथमदर्शने भवानपि अपरिचितः एव आसीत् खलु। पुनः कथं भवता सह तस्य स्नेहः प्रतिदिनं वर्धते? अतः यथा हरिणः मम बान्धवः तथैव भवानपि मम बान्धवः एव इति। हरिणः उक्तवान् - किमर्थं कोलाहलः? वयं त्रयः अपि मिलित्वा एव निवसामः इति। काकः यथाकथञ्चित् अङ्गीकृतवान्। ते सर्वे मिलित्वा एव वासं कृतवन्तः। एकदा काकस्य अनुपस्थितौ शृगालः हरिणं वदति - मित्र एतस्य वनस्य पार्श्वे एव सस्यसमृद्धं क्षेत्रमस्ति। अहं भवन्तं तत्र नयामि। भवान् यथेष्टं सस्यानि खादितुं शक्नोति तत्र इति। हरिणः अङ्गीकृतवान्। शृगालः हरिणं तत्र नीतवान्। अनन्तरं प्रतिदिनमपि हरिणः तत्र गत्वा सस्यानि खादति। तस्य क्षेत्रस्य स्वामी कृषकः तत् ज्ञातवान्।

एकस्मिन् दिने सः तत्र पाशं योजितवान्। तदज्ञात्वा तत्रागतः हरिणः पाशबद्धः अभवत्। ततः बहिः गन्तुम् अशक्तः सः हरिणः चिन्तिवान् - अहो महान् अनर्थः सञ्जातः। कः इदानीं मां रक्षति? तदा तत्रागतः शृगालः पाशबद्धं हरिणं दृष्ट्वा चिन्तितवान् यत् स्वीयमनोरथः सफलः इति। मित्रं शृगालं दृष्ट्वा अतीव सन्तुष्टः हरिणः पाशात् संरक्षितुम् उक्तवान् धूर्तः शृगालः उक्तवान्-मित्र! अहं किं करोमि? सः पाशः स्नायुनिर्मितः अस्ति, रविवासरे अहं मांसं न खादामि। अतः स्नायुनिर्मितं पाशं दन्तैः कथं वा स्पृशामि? अतः श्वः प्रभाते पश्यामि इति उक्त्वा शृगालः ततः प्रस्थानं कृत्वा एकत्र निमील्य स्थितवान्।

तदा हरिणाय अन्वेषणं कृत्वा तत्रागतः काकः पाशबद्धं हरिणं दृष्ट्वा पृष्टवान्-मित्र! किं एतत्? इति। हरिणः दुःखेन जातं सर्वं उक्तवान्। अहो दुष्टः शृगालः कीदृशं कार्यं कृतवान् इति वदन् काकः मित्रस्य रक्षणोपायं चिन्तितवान्। प्रातःकाले क्षेत्रस्य स्वामी दण्डं स्वीकृत्य तत्रागतः। दूरादेव तं दृष्ट्वा काकः हरिणम् प्रति एकम् उपायं दत्तवान्। भवान् मृतः इव शयनं कुरु। यथा मृतशरीरे इव अहं मम चञ्च्वा भवतः शरीरे किमपि कुर्वन् भवामि। यदा अहं शब्दं करोमि तदा भवान् झटिति उत्थाय पलायनं करोतु। हरिणः अङ्गीकृतवान् तथैव शयनं कृतवानपि। यदा कृषकः आगत्य हरिणः मृतवानिति विचिन्त्य पाशं निष्कासितवान् तदा काकः उच्चैः शब्दं कृतवान्। काकस्य शब्द श्रवणक्षणे एव हरिणः उत्थाय वेगेन धावितवान्। कुपितः कृषकः तम् उद्धिश्य दण्डं क्षिप्तवान्। परन्तु स च दण्डः तत्रैव पार्श्वे निमील्य स्थितस्य शृगालस्योपरि पतितः। शृगालः वेदनया आक्रोशं कुर्वन् ततः पलायितवान्।

**नीतिः - "क्षुद्रस्य मैत्री बहुकष्टदात्री"**



# पुत्रोत्तमः भीष्मः

तेलुगु मूलम् - श्री डॉ.कंपल्लि रविचन्द्रन्
संस्कृतानुवादः - यस्.अभिक्या
चित्राणि - श्री के.तुलसीप्रसादः

हस्तिनापुरमहाराजशन्तनुगङ्गादेव्योः जातस्य पुत्रस्य नाम देवव्रतः। जातं पुत्रं स्वर्गलोकं नीतवती। पुत्रस्य विद्याभ्यासानन्तरं भर्त्रे दत्तवती। राजा देवव्रतं युवराजानं कृत्वा मुमुदे।



एकदा राजाशन्तनुः यमुनानदीतटे विहरन्, तत्र मत्स्यगन्धिनामकनाविकां दृष्ट्वा विवाहं कर्तुम् इष्टवान्।



मां परिणाहि?

ओं! मम पितुः अङ्गीकारे सति...




अहो! यौवराज्याभिषिक्तं पुत्रं विहाय दाशराजस्य आशयं कथं वा अङ्गीकरोमि... हा धिक्!



देवव्रतः रथसारथिं पृष्ट्वा पितुः चिन्तायाः कारणं ज्ञातवान्।



दाशराज! भवतः पुत्रीं मम पितुः कृते पत्नीत्वेन अर्पय।



युवराज! मम अभिप्रायः भवतां पित्रे पूर्वमेव निवेदितः।



अहम् अस्मिन् क्षणे एव राज्याधिकारं त्यजामि। भवतः पुत्रिकासुत एव अवश्यं सर्वेषां ममापि च राजा भविष्यति।

एतादृशीं प्रतिज्ञां सर्वे अङ्गीकुर्वन्ति वा? भवान् निराकरोति चेदपि, भवतः सन्ततिः मौनेन भविष्यति वा?



तर्हि जीवने विवाहमेव न करोमि। आजीवनं ब्रह्मचारी भवामि। अनुमानं विना मम पितुः विवाहार्थं अङ्गीकुर्वन्तु।



आकाशात् पुष्पवृष्टिः अभवत्। सर्वाः देवताः आविर्भूय, पितुः सन्तोषार्थं स्वसुखं अधिकारं च त्यक्तं देवव्रतं प्रशंस्य, भीषणप्रतिज्ञां अकरोत् इति हेतोः भीष्म इति व्यवह्रियते इत्याशीरूचुः।

दाशराजः सन्तोषेण सत्यवत्याः शन्तनुना सह विवाहर्थं तां भीष्मेण साकं हस्तिनापुरं प्रेषितवान्।





मान्याः! अमात्यसामन्तादिपुरप्रमुखाः! एकपुत्रकः पुत्रविहीनसमानः। अतः महाराजस्य विवाहेच्छा सर्वेषां सन्तोषजननी एव।



भीष्मः सत्यवती-शन्तन्वोः विवाहं अकार्षीत्।






भीष्म! नमो त्यागचरित
नमो पुण्यपुरुष!
प्रतिज्ञार्थं अखिलजीवन
समर्पक!
आदर्शपुरष!
अखिललोकपरुष!
भवतां चरितं भारतीयानां
अनुस्मरणीयम्। 'तथास्तु'।

स्वस्ति

अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

- श्री वि.प्रदीपाचार्यः
चरवाणी - ९४९१६४६५३२

१. अष्टादशपुराणेषु बृहत्तमपुराणं किम्?
अ. अग्निपुराणम् आ. पद्मपुराणम्
इ. स्कन्दपुराणम् ई. गरुडपुराणम्

२. अधोलिखितेषु किं पुराणं 'व 'चतुष्टये नान्तर्भवति-
अ. वामनपुराणम् आ.विष्णुपुराणम्
इ. वराहपुराणम् ई. वरिवस्यापुराणम्

३. ''पौलस्त्यवधम्'' इति कस्यापरं नाम?
अ. श्रीमद्रामायणस्य आ. भट्टिकाव्यस्य
इ. भोजप्रबन्धस्य ई. महाभारतस्य

४. वशिष्ठस्य पत्नी का -
अ. शकुन्तला आ. अनसूया
इ. प्रियंवदा ई. अरुन्धती

५. रामायणे सेतुनिर्माणं कतिषु दिवसेषु कृतम्?
अ. पञ्चसु आ. त्रिषु
इ. चतुर्षु ई. षट्सु

६. रामायणे रामचन्द्राय शबरीसूचना केन प्रदत्ता?
अ. कबन्धेन आ. जटायुषा
इ. गुहेन ई. विश्वमित्रेण

७. भगवद्गीतायां कर्मसंन्यासयोगाध्यायः कः?
अ.तृतीयः आ.चतुर्थः
इ. पञ्चमः ई. षष्ठः

८. भीष्मस्य सेनाधिपतित्वे युद्धं प्रवृत्तम् -
अ.चत्वारि दिनानि आ.एकादश दिनानि
इ. दश दिनानि ई. त्रीणि दिनानि

९. ''श्रुतं मे गोपाय'' इत्युक्तिः कस्यामुपनिषदि वर्तते?
अ.बृहदारण्यकोपनिषदि आ.छान्दोग्योपनिषदि
इ. तैत्तिरियोपनिषदि ई. कठोपनिषदि

१०. उपनिषत्सु सर्वप्रथमं भाष्यं कः लिखितवान्?
अ.स्कन्दस्वामी आ.सायणः
इ. दयानन्दः ई. शङ्कराचार्यः

समाधानानि - १.इ २.ई ३.अ ४.ई ५.इ ६.अ ७.इ ८.इ ९.इ १०.ई

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.










लोकक्षेमाय, करोनानाशाय, लोकसुभिक्षायै यस्.वि.वेदविश्वविद्यालये १५.१२.२०२० दिनाङ्के आचरिते 'धनप्रदमहाविष्णुयागे' ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस्, ति.ति.दे.अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः च।



जनवरि १० तः १४ दिनाङ्कपर्यन्तं श्रीस्वामिनः तिरुमल वसन्तमण्टपे 'श्रीविष्णुबिल्वार्चनम्' आचरितम्।



धनुर्मासान्तसन्दर्भे १४.०१.२०२१ दिने ति.ति.दे परिपालनाभवनक्रीडाङ्गणे अतिवैभवम् आचरितं गोदाकल्याणम्। अस्मिंश्च कार्यक्रमे भागं गृहीताः ति.ति.दे. कार्यनिर्वहणाधिकारिणः के.यस्.जवहर् रेड्डि ऐ.ए.एस्, ति.ति.दे.अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि, शासनमण्डलिसभ्याः श्रीमति वेमिरेड्डि प्रशान्ति, यम्.पि श्री वेमिरेड्डि प्रभाकर् रेड्डि महोदयाः इतराधिकारिणश्च।





१५.०१-२०२१ दिनाङ्के तिरुमलक्षेत्रे आचरितः श्रीश्रीनिवासपल्यङ्कोत्सवः। अस्मिन् ति.ति.दे. अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः तथा इतरालयाधिकारिणश्च भागं गृहीतवन्तः।




# देवुनि कडपा

## श्री लक्ष्मीवेङ्कटेश्वरस्वामिनः

## ब्रह्मोत्सवाः

२०२१ फिब्रवरि
१३ तः २१ पर्यन्तम्